ताविति ॥ शिथिलितोपगूहनौ शिथिलितालिङ्गनौ । जाया च पतिश्च दंपती ॥ जायाशब्दस्य दंभावो निपातितः ॥ तौ शिवौ रचितमानसोर्मयः । मानसे सरसि रचिततरंगा इत्यर्थः । पद्मभेदनिपुणाः पद्मभेदपिशुना इति यावत् । विकाससूचका इत्यर्थः । गन्धमादनवनान्तमारुताः क्षणं सिषेविरे ॥

ऊरुमूलनखमार्गराजिभिस्तत्क्षण हृतविलोचनो हरः ।
वाससः प्रशिथिलस्य संयमं कुर्वतीं प्रियतमामवारयत् ॥८७॥

ऊर्विति ॥ तत्क्षणं मारुतवीजनसमय ऊरुमूले नखमार्गराजिभिर्नखपदपङ्क्तिभिः । मरुता प्रसारितवस्त्रतया प्रकाशिताभिरित्यर्थः । हृतविलोचन आकृष्टदृष्टिर्हरः प्रशिथिलस्य वाससः संयमं बन्धनं कुर्वतीं प्रियतमामवारयत् ॥

स प्रजागरकषायलोचनं गाढदन्तपदताडिताधरम् ।
आकुलालकमरंस्त रागवान्प्रेक्ष्य भिन्नतिलकं प्रियामुखम् ॥८८॥

स इति ॥ रागवान्रागी स हरः प्रजागरेण कषायलोचनं रक्तनेत्रं गाढैर्दन्तपदैर्दन्तक्षतैस्ताडिताधरमाकुलालकं भिन्नतिलकं प्रियामुखं प्रेक्ष्यारंस्तान्वरज्यत । तादृङ्मुखदर्शनमेव तस्योद्दीपकमित्यर्थः ॥

तेन भङ्गिविषमोत्तरच्छदं मध्यपिण्डितविसूत्रमखलम् ।
निर्मलेऽपि शयनं निशात्यये नोज्झितं चरणरागलाञ्छितम् ८९

तेनेति ॥ तेन हरेण भङ्गिभिर्भङ्गैर्विषमो निम्नोन्नत उत्तरच्छदः प्रच्छदपटो यस्मिंस्तत् । मध्ये पिण्डिता पुञ्जीकृता विसूत्रमेखला छिन्नरसना यस्मिंस्तत्तथोक्तं चरणयो रागेण लाक्षारागेण लाञ्छितं चिह्नितं शयनं निशात्यये प्रभाते निर्मलेऽपि । सूर्योदये सत्यपीत्यर्थः । नोज्झितं न त्यक्तम् । अत्र देव्याः सकलसुरतोपचारसंपन्नत्वं पुरुषायितं सूच्यते ॥

स प्रियामुखरसं दिवानिशं हर्षवृद्धिजननं सिषेविषुः ।
दर्शनप्रणयिनामदृश्यतामाजगाम विजयानिवेदितः ॥ ९० ॥

स इति ॥ स हरो हर्षवृद्धिजननं सुखातिशयकारणं प्रियामुखरसं मदिरामृतं दिवा च निशि च दिवानिशम् ॥ द्वन्द्वैकवद्भावः ॥ सिसेविषुः सेवितुमिच्छुः सन् । विजयानाम्नी काचिद्देव्याः सखी तया निवेदितः । एतदर्थमागतेति ज्ञापितोऽपीत्यर्थः । दर्शनप्रणयिनामदृश्यतामाजगाम । दर्शनं न ददावित्यर्थः ॥

समदिवसनिशीथं सङ्गिनस्तत्र शंभोः
शतमगमदृतूनां सार्धमेका निशेव ।
न स सुरतसुखेभ्यश्छिन्नतृष्णो बभूव
ज्वलन इव समुद्रान्तर्गतस्तज्जलौघैः ॥ ९१ ॥

समेति ॥ निशीथोऽत्र निशामात्रलक्षकः । समदिवसनिशीथं तुल्याहर्निशं यथा तथा तत्र तस्यां पार्वत्यां सङ्गिन आसक्तस्य । रात्रिंदिवं रममाणस्येत्यर्थः । शंभोः शिवस्य सार्धमर्धेन सहितमृतूनां शतं पञ्चाशदुत्तरं मानुषमानेन पञ्चविंशतिवर्षाण्यगमन् । स शंभुः समुद्रान्तर्गतः समुद्रस्यान्तर्वर्तिर्ज्वलनो वडवाग्निरिव तज्जलौघैस्तस्य समुद्रस्य प्रवाहैरिव सुरतसुखेभ्यश्छिन्नतृष्णो निवृत्ताभिलाषो न बभूव । किंतु चिरमवर्धतेत्यर्थः ॥

इति श्रीमन्महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया संजीविनी-
समाख्यया व्याख्यया समेतः श्रीकालिदासकृतौ कुमारसंभवे
महाकाव्य उमासुरतवर्णनं नामाष्टमः सर्गः ।

